श्रीभगवानु वाच
श्रीमद्भागवतं नाम पुराणं लोकविश्रुतम् ।
श्रृणुयाच्छ्रद्धया युक्तो मम सन्तोषकारणम् ॥१॥
नित्यं भागवतं यस्तु पुराणं पठते नरः ।
प्रत्यक्षरं भवेत्तस्य कपिलादानजं फलम् ॥२॥
श्लोकार्धं श्लोकपादं वा नित्यं भागवतोद्भवम् ।
पठते श्रृणुयाद् यस्तु गोसहस्रफलं लभेत् ॥३॥
यः पठेत् प्रयतो नित्यं श्लोकं भागवतं सुत ।
अष्टादशपुराणानां फलमाप्नोति मानवः ॥४॥
नित्यं मम कथा यत्र तत्र तिष्ठन्ति वैष्णवाः ।
कलिबाह्या नरास्ते वै येऽर्चयन्ति सदा मम ॥५॥
वैष्णवानां तु शास्त्राणि येऽर्चयन्ति गृहे नराः ।
सर्वपापविनिर्मुक्ता भवन्ति सुरवन्दिताः ॥६॥
येऽर्चयन्ति गृहे नित्यं शास्त्रं भागवतं कलौ ।
आस्फोटयन्ति वल्गन्ति तेषां प्रीतो भवाम्यहम् ॥७॥
यावद्दिनानि हे पुत्र शास्त्रं भागवतं गृहे ।
तावत् पिबन्ति पितरः क्षीरं सर्पिर्मधूदकम् ॥८॥
यच्छन्ति वैष्णवे भक्त्या शास्त्रं भागवतं हि ये ।
कल्पकोटिसहस्राणि मम लोके वसन्ति ते ॥९॥
येऽर्चयन्ति सदा गेहे शास्त्रं भागवतं नराः ।
प्रीणितास्तैश्च विबुधा यावदाभूतसंप्लवम्
॥१०॥ श्लोकार्धं श्लोकपादं वा वरं भागवतं गृहे ।



शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहै ॥११॥
न यस्य तिष्ठते शास्त्रं गृहे भागवतं कलौ ।
न तस्य पुनरावृत्ति-र्याम्यपाशात् कदाचन ॥१२॥
कथं स वैष्णवो ज्ञेयः शास्त्रं भागवतं कलौ ।
गृहे न तिष्ठते यस्य श्वपचादधिको हि सः ॥१३॥
सर्वस्वेनापि लोकेश कर्तव्यः शास्त्रसंग्रहः ।
वैष्णवस्तु सदा भक्त्या तुष्टयर्थं मम पुत्रक ॥१४॥
यत्र यत्र भवेत् पुण्यं शास्त्रं भागवतं कलौ ।
तत्र तत्र सदैवाहं भवामि त्रिदशैः सह ॥१५॥
तत्र सर्वाणि तीर्थानि नदीनदसरांसि च ।
यज्ञाःसप्तपुरी नित्यं पुण्याःसर्वे शिलोच्चयाः ॥१६॥
श्रोतव्यं मम शास्त्रं हि यशोधर्मजयार्थिना ।
पापक्षयार्थं लोकेश मोक्षार्थं धर्मबुद्धिना ॥१७॥
श्रीमद्भागवतं पुण्य-मायुरारोग्यपुष्टिदम् ।
पठनाच्छ्रवणाद् वापि सर्वपापैः प्रमुच्यते ॥१८॥
न श्रृण्वन्ति न हृष्यन्ति श्रीमद्भागवतं परम् ।
सत्यं सत्यं हि लोकेश तेषां स्वामी सदा यमः ॥१९॥
न गच्छति यदा मर्त्यः श्रोतुं भागवतं सुत ।
एकादश्यां विशेषेण नास्ति पापरतस्ततः ॥२०॥
श्लोकं भागवतं चापि श्लोकार्धं पादमेव वा ।
लिखितं तिष्ठते यस्य गृहे तस्य वसाम्यहम् ॥२१॥
सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।

न तथा पावनं नृणां श्रीमद्भागवतं यथा ॥२२॥
यत्र यत्र चतुर्वक्त्र श्रीमद्भागवतं भवेत् ।
गच्छामि तत्र तत्राहं गौर्यथा सुतवत्सला ॥२३॥
मत्कथावाचकं नित्यं मत्कथाश्रवणे रतम् ।
मत्कथाप्रीतमनसं नाहं त्यक्ष्यामि तं नरम् ॥२४॥
श्रीमद्भागवतं पुण्यं दृष्ट्वा नोत्तिष्ठते हि यः ।
सांवत्सरं तस्य पुण्यं विलयं याति पुत्रकः ॥२५॥
श्रीमद्भागवतं दृष्ट्वा प्रत्युथानाभिवादनैः ।
सम्मानयेत तं दृष्ट्वा भवेत् प्रीतिर्ममातुला ॥२६॥
दृष्ट्वा भागवतं दुरात् प्रक्रमेत् सम्मुखं हि यः ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥२७॥
उत्थाय प्रणमेद् यो वै श्रीमद्भागवतं नरः ।
धनपुत्रांस्तथा दारान् भक्तिं च प्रददाम्यहम् ॥२८॥
महाराजोपचारैस्तु श्रीमद्भागवतं सुत ।
श्रृण्वन्ति ये नरा भक्त्या तेषां वश्यो भवाम्यहम् ॥२९॥
ममोत्सवेषु सर्वेषु श्रीमद्भागवतं परम् ।
श्रृण्वन्ति ये नरा भक्त्या मम प्रीत्यै च सुव्रत ॥३०॥
वस्त्रालङ्करणैः पुष्पै-र्धूपदीपोपहारकैः ।
वशीकृतो ह्यहं तैश्च सत्स्त्रिया सत्पतिर्यथा ॥३१॥